अङ्क-२६
जुलाई-दिसम्बर २०१५

**वेदविद्या**
ISSN-2230-8962

# लक्ष्यलक्षणे व्याकरणम्

**डॉ. रामनारायण द्विवेदी**

इदं वाक्यं व्याकरणमहाभाष्ये व्याकरणलक्षणविचारप्रसङ्गे निर्दिष्टम्। अत एव १ 'अथ शब्दानुशासनम्' इति उपक्रमभूत- महाभाष्यवाक्ये शब्दनुशासनपदेन व्याकरण शास्त्रं गृह्येते। व्याकरणाध्ययनस्य साधुपरमं प्रयोजनम शब्दज्ञानमेव। शब्दा अनुशिष्यन्ते असाधुशब्देभ्यो विविच्य पृथक्कृत्य बोध्यन्तेऽनेनेति करणल्युड्विधानाच्छदत एव। अतस्तत्र शब्दनुशासनपदघटकशब्दपदेन साधुशब्दग्रहणात् सामर्थ्यात्। शब्दज्ञानस्य व्याकरणाध्ययनस्य परमप्रयोजनमवसीयते। अत एव २ साध्वनुशासनेशास्त्रे इत्युक्तम्। कैयटोऽपि महाभाष्यतत्ववेत्ता। अथ शब्दानुशासनमिति। महाभाष्यव्याख्यानावसरे महाभाष्यकारो विवरणकारत्वाद् व्याकरणस्य साक्षात्प्रयोजनमाह अथ शब्दानुशासनमिति। प्रयोजनप्रयोजनानि तु रक्षादीनि पश्चाद् वक्ष्यन्ते इति। तत्र घटितज्ञाने घटकज्ञानस्य कारणत्वात् प्रतिज्ञाशब्द शब्दानशासनस्य घटको यः शब्दस्तस्य लक्षणं पूर्वं विधेयमिति धिया भगवता महाभाष्यकृत सामान्यतोऽनुशासनीयशब्दस्वरूपं निर्दिष्टं।

तत्रैकं शब्दस्वरूपं स्फोटशब्दाभिप्रायेण ३ येनोच्चारितेन सास्नालाङ्गूल-ककुदखुरविषाणिनां सम्प्रत्ययो भवति स शब्द, इत्यनेन् निर्दिष्टम्। अपरञ्च ध्वनेः शब्दस्वरूपाभिप्रायेण अथवा प्रतीतपदार्थको लोके ध्वनिः शब्द इत्युच्यते इत्यनेन। ततश्च साधुशब्दविषयक-प्रमात्मकज्ञानसाधनस्य शब्दानुशासनापराभिधानस्य व्याकरणस्य किं निर्दुष्टं लक्षणमिति जिज्ञासाया नैसर्गिकत्वातत्र महाभाष्ये शङ्कासमाधानदले प्रदर्शिते। पूर्व महाभाष्ये ४ न चान्तरेण व्याकरणम् शब्दाःज्ञेया तस्मादध्येयं व्याकरणम्, इत्यादिमहाभाष्ये-बचोभिर्व्याकरणाध्ययन स्यावश्यानुष्ठेयताम् प्रतिपाद्य अथ व्याकरणमित्यस्य कः पदार्थः इति व्याकरणस्वरूपनिर्दिष्टा जिज्ञासा प्रदर्शिता। अत्रायं विशेषः शब्दप्रमाणस्य प्रमाणान्तरेभ्योऽयं विशेषो विद्यते यदुत्थापिताया वा उत्थाप्याया जिज्ञासायाः संशयस्य च निवर्तकत्वमिति। अत्र च व्याकरणाध्ययनस्य शब्दसाधुत्वरूपमुख्यप्रयोजनकत्वे रक्षोहादिमहाभाष्योक्त-प्रयोजनप्रयोजनवत्वे च भगवता महाभाष्यकृता प्रकरणम् प्रारब्धम्। तत्र स्मृतत्वे

---

[१] महाभाष्ये - पस्पशाह्निके आदौ
[२] महाभाष्ये - पस्पशाह्निके
[३] महाभाष्ये - पस्पशाह्निके
[४] महाभाष्ये - पस्पशाह्निके

सत्युपेक्षानर्हत्वलक्षणायाः प्रसङ्गसङ्गतेः सत्वादवश्यं व्याकरणशब्देन व्यवह्रियमाणस्य पदार्थस्य निश्चयो विधेय इति कृत्वा भगवता ग्रन्थोऽयमवतारिताः। अथ व्याकरणमित्यस्य शब्दस्य कः पदार्थः इति तत्र व्याकरणस्यानेकानि लक्षणानि प्रदर्शितानि। तत्र तत्र चानेके दोषाः प्रदर्शिताः।

तेषु लक्षणेष्वन्यतममिदं लक्षणं व्याकरणस्य [१]लक्ष्य लक्षणे व्याकरणम् इति। अत्र किञ्चिद्विमृश्यते कस्यचिद्वाक्यस्य बुबोधयिषयैव प्रयोगो भवति। प्रत्युक्तेन च वाक्येनबोधसम्भवे प्रयुक्तेन च वाक्येनबोधसम्भवे अप्रयुक्तस्य वाक्यस्य व्याख्यानं न युक्तामिति प्राप्ते वदन्ति किल विज्ञाः-अप्रतिपत्तौ अतिप्रतिपत्तौ वा व्याख्यानं इति। तथा चोक्तं रामरुद्रभट्टाचार्यैः - [२] अप्रतिपत्तेरन्यथाप्रतिपत्तेर्वा निरासायैव हि विवरणं कुर्वन्ति सन्तः इति। एव च कोऽत्र दोषो यस्य निराकरणाय महाभाष्यकृता लक्ष्य लक्षणे व्याकरणम् इति वाक्यस्य व्याख्यानं कृतम्। शब्दो लक्ष्यः सूत्रं लक्षणम् इति। सन्ति च लक्षणस्य दोषास्त्रयाः। अव्याप्तिव्याप्त्यसम्भव्याख्याः। ते एव दोषा सूत्रभूतस्य वाक्यस्य व्याख्याने हेतुभूतप्रदर्शनेन भट्टाचार्यैरभिहिताः अप्रतिपत्तौ अन्यथाप्रतिपत्तौ वा व्याख्यानं कुर्वन्ति सन्तः इति। एवं प्रकृते के दोषाः सम्भाविता आसन् येषां निरासाय व्याख्यानं कृतमिति प्रश्नः। अत्रोत्तरमिदं वर्तते। तथाहि यदि लक्ष्यः शब्दो लक्षणं सूत्रम् इति व्याख्या कृता स्यान्महाभाष्यकृता तदाऽनेकेषु स्थलेषु दोषाः। अतस्तत्र तत्र प्रसक्तामतिव्याप्तिं वारायितुमेव व्याख्यानं प्रवृत्तम यदि व्याख्या या कृता सा न स्यात्तदा [३]प्रत्ययलोपे प्रत्ययलक्षणम्। इति सूत्रघटेन लक्षण पदेन बुबोधयिषिते निमित्तर्थेऽतिव्याप्तिः स्यात्। एवमेव [४]अनुर्लक्षणे [५]लक्षणेत्थंभूताख्यानभाग बीप्सासु प्रतिपर्यनवः, इत्यत्र चातिव्याप्तिः। तत्र लक्षणपदेन् ज्ञानजनकज्ञानविषयो ग्रहीतुमिष्टं तत्रातिव्याप्तिः एवमेव [६]संघांकलक्षणेष्व्यंयजजमण् इति सूत्रे लक्षणपदेन चिह्नरूपेऽर्थेऽतिप्याप्तिः। अत एव तत्र समानार्थकयोरङ्लक्षणपदयो रूपादानम् नूनं पुनरुक्तिं प्रसंजयतीति शंकायाः स्वाभाविकत्वातद्वारणाय विभन्नार्थकत्वमत्र वर्ततेऽतो न पुनरुक्तिदोष इति दिदर्शयिषया श्रीभट्टोजीदीक्षितेन सिद्धान्तकौमुदीव्याख्याने विभिन्नार्थकत्वमुपपादित मनयोरुभयोः शब्दयोः। कौमुद्यां शैषिकप्रकरणे [७]परम्परा सम्बन्धोऽङ्कः साक्षात्तु लक्षणम - इत्युक्तम् उपपादितं च

[१] महाभाष्ये - पस्पशाह्निके

[२] न्यायसिद्धान्तमुक्तावलीप्रत्यक्षखण्डे ४६ पृष्ठे रामरुद्रीव्याख्यायाम्

[३] पा.सू. १/१/६२

[४] पा.सू. १/४/८४

[५] पा.सू. १/४/९०

[६] पा.सू. ४/२/१२६

[७] वैयाकरणसिद्धान्तकौमुद्यां शैषिकप्रकरणे ४४० पृष्ठे बालमनोरमा तत्त्वबोधिनियुतायाम्।

लक्षणं च चिह्नं लक्ष्यं च लक्षणम्, इत्यमर इति। यथा गवादिनिष्ठः स्वामिना गोद्वारा सम्बन्धः। साक्षादिति-यथा विद्यानां विद्या इति। तथाहि[1]मतिबुद्धिपूजार्थेभ्यश्च, इति सूत्रे मतिबुद्धयोरेकार्थयोः शब्दयोरुपादानम् पुनरुक्तिवैयर्थ्यचेत्यतः प्रथकग्रहणसामर्थ्यातत्र मतिशब्दस्येच्छापरत्वप्रतिपादनेन कौमुद्यां दिक्षितेन महाभाष्यसम्मतपक्षेण दोषनिरासः कृतस्तथैव प्रकृतेऽपि भिन्नार्थकत्वान्न वैयर्थ्यम् न वा पुनरुक्तिदोषः। एवंन्च तत्र लक्षण शब्देनाभिप्रेतेऽर्थे चिह्नरूपेऽतिव्याप्तिः स्यान्महा-भाष्यीयव्याकरणलक्षणस्यव्याकरणमित्यस्य। अपरंच-लक्षणप्रमाणाभ्यां वस्तुसिद्धिरिति नियमात् कस्यचिद्वस्तुनो लक्षणं तत्र प्रमाणंचावश्यं दर्शनीयम्। तत्र लक्षणस्य किं लक्षणमिति विचारे असाधारण धर्मो लक्षणम् धर्मेऽसाधारण्यंच लक्ष्यता-वच्छेदकसमनियततत्वम् । लक्ष्यतावच्छेदकसमनियततत्वंन्च। तद्व्याप्यत्वे सति तद्व्यापकत्वम्।

यथा - गोः सास्नादिमत्वं लक्षणम्। प्रथिव्या लक्षणम् गन्धवत्वम्। एवंच यदि भगवता महाभाष्यकृता लक्ष्यलक्षणे व्याकरणम् इत्युक्तवता विरतं स्यात्तर्हि गवादिलक्षणेषु सास्नादिषु व्याकरणलक्षणस्यादिव्याप्तिः स्यात्। अतस्तत्रत्यामतिव्याप्तिं निरासयितुं व्याख्या विहिता न वैयर्ध्यमासादयितुंयुक्तं लक्ष्यपदेन् प्रसिद्धेषु गवादिषु चातिव्याप्तिः स्यादतो लक्ष्यपदेन न गवादयो विवक्षिता अत्र, किन्तु शब्द प्रयोगः इति वदतो न कश्चत् दोषः। ननु लक्ष्यलक्षणे व्याकरणम्, इति वचनेन् व्याकरणशास्त्रीयव्यवहारे लक्षणशब्देन् सूत्रस्यैव ग्रहणात् सर्वाणि सूत्राणि लक्षणपदाभिधेयान्येव भविष्यन्ति। तथा च [2] लक्षण प्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्। इति परिभाषया लक्षणप्रतिपदोक्तयोर्भेदः कथं स्यात्? प्रतिपदोक्तस्यापि लक्षणत्वेन् भेदीयानुयोगितावच्छेदकत्वाभावात्। न हि भवति विशेषे सामान्यभेदः घटो न द्रव्यमिति द्रव्यत्वस्य घटे वृत्तित्वेन् भेदीयानुयोवितावच्छेदकत्वा भावात्। एवमेवत्रापि प्रतिपदोक्तशास्त्रस्यापि लक्षणत्वेन् प्रतिपदोक्तं न लक्षणमिति भेदाग्रहणात् कथं परिभाषायाः प्रवृत्तौ साधुशब्दनिष्पत्तिः? कथंच बाध्यबाधकभावोपपत्ति? एवमेवानेकाशः परिभाषायाः अप्रामाण्या-शंकाकवलितत्त्वान्निश्चितार्थबोधाजननेन विधिशास्त्रोपकारिका न स्युः। यथा - [3]लक्षणान्तरेण प्राप्नुवन् विधिरनित्यः, [4]यस्य च लक्षणान्तरेण निमितं विहन्यते तदप्यनिप्यम्, [5]सन्निपातलक्षणो विधिरनिमित्तं तद्विधातस्य इति। वैयाकरण सिद्धान्तकौमुद्यां भट्टोजिदीक्षितेन शैषिकप्रकरणे [6]'शेषे' इति सूत्रे तस्य सूत्रस्य लक्षणत्वमधिकारत्वंच प्रतिपादितम्। यदा सर्वाणि

---

[1] पा.सू.
[2] परिभाषेन्दुशेखरे भूतियुते
[3] परिभाषेन्दुशेखरे भूतियुते - पृ. सं. ३२०, द्वितीयतन्त्रे - परि. सं. ४५
[4] परिभाषेन्दुशेखरे भूतियुते - पृ. सं. ३२०, तृतीयतन्त्रे - परि. सं. ४६
[5] परिभाषेन्दुशेखरे भूतियुते - पृ. सं. ३२०, तृतीयतन्त्रे - परि. सं. ८६
[6] पा.सू. ४/२/९२

लक्षणपदाभिधेयानि तदा कथं लक्षणाधिकारशास्त्रयोः प्रविभागः कर्तुं शक्यः? उक्तंच महावैयाकरणेन महाभाष्यतत्वविदा विदुषा श्रीभट्टोजिदीक्षितेन- [1] "शेषे इति लक्षणंचाधिकारंच" इति शेषे इति सूत्रस्थमहाभाष्यविवरणे प्रदीपे कैयटप्रणीते सूत्रस्यास्य लक्षणत्वमुपपादितम्। नागेशभट्टेनापि तथैव प्रतिपादितम्। इत्थंच सर्वेषां सूत्राणां महाभाष्यदिशा लक्षणत्वाद्वैयाकरणधुरीणैः प्रामाणिकैराचार्यैः कृतास्तादृशा व्यावहाराः कथं प्रामाण्यसाम्राज्यमासादयेयुरिति चेदत्र विमृश्यते। तथाहि-याः परिभाषाः प्रदर्शितास्तत्र कृतो लक्षणशब्दप्रयोगः लाक्षणिकपरः। अर्थाद् एकः शब्दः स्वयमेव तादृशानुपूर्वीविशिष्ट एकंच लक्षेणेन सूत्रेण तादृशीमानुपूर्वी प्रापितः। तत्र द्वयोरेककार्यप्रसंगे यच्च कार्यमनिष्ठं कथं व्यवस्था स्यात्, अतस्तास्ताः, परिभाषा अनियमे नियमकारित्वाद् विधिशास्त्रस्याप्रामाण्य-ज्ञानानास्कन्दितलक्ष्य-धर्मिकसाधुत्वप्रकारकज्ञानजनने साहायमाचरन्ति। यथा [2](पा) पाने इति धातुः स्वयमेवाकारान्तः एकश्च [3](पै ओं वै) शोषणे इत्यपि धातुः। तत्र चात्वे कृते पा इति सम्पद्यते। तस्य एव "पाति" इति भवति पा पाने इत्यस्य तु पिबति। तत्र लक्षणेन (सूत्रेण [4]आदेच् उपदेशेऽशिति इति सूत्रेणात्वे कृते द्वयोरानुपूर्व्योः साम्यात् - [5]गातिस्थ घूपा भूभ्यः सिचः परस्मैपदेषु इति इत्यनेन सिचो लुक् स्यात्।

एवमेव परमेण कारकेण परम कारकेण इत्यत्र [6] तत्पुरुषेतुल्यार्थतृतीया-सप्तम्युपमानाव्ययद्वितीयाकृत्वाः इति सूत्रेण तुल्यस्वरापत्तिः स्यात्। अतो वारितो दोषः परिभाषयाऽनया। अतोऽत्र लक्षणपदेन लाक्षणिकस्य ग्रहणम्। सूत्रद्वारा प्राप्त तादृशानुपूर्वीमत्वम्। अर्थाद् विधि शास्त्र घटकानु पूर्वी सादृशानुपूर्वी यत्र सूत्रेण निष्पादिता तत्रैव कृतं तादृशम् न तु सूत्र सहकारेण तादृशानुपूर्वीलाभस्ते भवन्ति प्रति पदोक्ताः शब्दाः। अत एव गणपाठस्यापि सार्थक्यम्। एवंच न ते व्यावहारा आचार्यैः कृता व्यर्थाः। अतः चोक्तं परिभाषेन्दु शेखरे नागेश भट्टेन लक्षणं लाक्षणिकमुपचरात्। तद् विभक्तिविशेषानुवादेन विहितो यः समासादिः प्रतिपदोक्तस्तस्यैव ग्रहणम् शीघ्रोपस्थिकत्वात्। द्वितीयो हि विलम्बोपस्थितिकः। पै इत्यस्य पा इति रूपं लक्षणानुसन्धानपूर्वकं विलम्बोपस्थितिकम् पिबतेस्तु तच्छीघ्रोपस्थितिकम्। [7]इदमेव एतस्याः परिभाषायाः बीजम् इति।

अन्यास्वपि परिभाषासु इत्थमेव दोषानिराकरणं कर्तव्यम्। शेषे इति सूत्रस्थ सिद्धान्तकौमुदीस्थ वाक्यन्तु लक्षण पदेन विधि सूत्रस्य ग्रहणेन संलापनीयम्। अर्थात् शेष इति सूत्रं विधिसूत्रमपि

[1] वैयाकरणसिद्धान्तकौमुद्यां शैषिकप्रकरणे पृ. सं. ३८५

[2] धापुपाठः ९२५

[3] भ्वादिप्रकरणे कौमुद्यां मूलमात्रपुस्तके, पृ. सं. ११८

[4] पा.सू. ६/१/४५

[5] पा.सू. २/४/६६

[6] पा.सू. ६/२/२

[7] परिभाषेन्दु शेखरे भूतियुते, पृ.सं. ३२१

अधिकारसूत्रमपि। षड्विधानि किल सूत्राणि प्रोक्तानि। तथाहि - [1]संज्ञा च परिभाषा च विधिर्नियम एव च। अतिदेशोऽधिकारश्च षड्विधं सूत्र लक्षणम्। एवंच शेषे इति सूत्रं यदिकेवलं विधिरूपमेव स्यान्न च स्याद् अधिकारसूत्रं तर्हि उत्तरसूत्रेषु अनुवृत्तेरभावाच्छेषवमेव तेषां न स्याद्। उक्तादन्यः शेषः इति।

**डॉ. रामनारायण द्विवेदी**
सहायकाचार्यः व्याकरण विभागे
राजकुमारी गणेश शर्मा संस्कृत विद्यापीठम्,
कोलहण्टा, पटोरी, दरभंगा, बिहार

[1] लघुशब्देन्दु शेखरे सदीपके संज्ञाप्रकरणे टिप्पण्यामुद्धृतम्, पृ. सं. ३।